श्री

राधामाधवापरपर्यायं

# विटविभावरी

नाम खण्डकाव्यम्

श्रिवाञ्चिमहाराज्ञीवल्लभश्रीमत्केरळवर्मपर्पनृपतेः

प्रियभागिनेयेन प्रथमान्तेवासिना च

**अ. रा. राजराजवर्मणा**

( अधुना एं. ए. उपाधिधारिणा ) बालकविना

प्रणीतम्

तस्यैव मातुलसूनुना (अधुना स्यालेन बि. ए. उपाधिधारिणा)

**म. उदयवर्मणा**

विरचितया चन्द्रिकाख्यया व्याख्यया संवलितम्

विज्ञानचिन्तामणिमुद्रालये मुद्रितम्

मुद्रापकः ए. रामशर्मा

१८९४

श्री

विटाविभावरी नाम

खण्डकाव्यम्

प्रारभ्यते

प्रथमो यामः ॥

जातु सायमतुषारदीधितौ पश्चिमांबुधिविलंबिमण्डले ।
श्रीपतिः श्रितकाळिन्दजातटः पार्श्वगं सुहृदमेवमब्रवीत् ॥ १ ॥

व्याख्यानपीठिका

कलये हृदि कुलमातस्त्रिदशेश्वरवन्द्यमांघ्रिपद्मन्ते। करुणां कुरु परिपूर्णामस्मिन् भक्ते निरालंबे ॥ श्रीमत्कोलनृपालविश्रुतमहावंशोत्थशाखाशतेष्वौन्नत्यस्पृशि जात एष कुहचित् कोणे करीरांकुरः । पर्पक्षोणिपराजराजसुधियः पैतृष्वसेयस्य मे काव्यं नव्यगुणं गुरोर्गुरुगिरो व्याख्यातुमद्यारभे ॥ क मल्लिनाथादिबुधेन्द्रमेधा प्रज्ञा च मे क प्रतिभाविदूरा । अनुग्रहः केवलमाश्रयो मे शिष्योदयौत्सुक्यजुषां गुरूणाम् ॥ व्याख्यां नापेक्षते विज्ञो लब्धाप्यज्ञस्य सा मुधा । तस्मादस्मादृशामेषा किञ्चिज्ज्ञानां कृते कृता ॥

अथ तत्रभवान् श्रीराजराजवर्मकविर्विटाविभावरीनामकं खण्डकाव्यं चिकीर्षुः श्रीवासुदेवलीलानुवर्णनरूपस्य स्वप्रबन्धस्य स्वतो मङ्गळात्मकस्य विघ्नविघातायर्थकमङ्गळान्तरानपेक्षतया आशीर्नमस्क्रियादिरूपं त-

दृश्यतामिह चिरायितोऽप्ययं वासरोऽद्य परिहीयते शनैः ।
सन्निधित्सति च बन्धुरं महः सान्धिवेलमतिवेलपेशलम् ॥ २ ॥

अस्तशैलशिखराग्रमण्डनं मण्डलं वहति चण्डरोचिषः ।
पाशपाणिपुरगोपुरस्फुरच्छातकुम्भमयकुम्भविभ्रमम् ॥ ३ ॥

मानिनीहृदयमानभेदनो मादृशेष्वदयमानमानसः ।
वाति गन्धवह एष मन्थरं जातिगन्धवहनश्रमालसः ॥ ४ ॥

सामिसंकुचितपद्मलोचना हीयमानकळहंसकस्वना ।
उन्मुखी स्वपिति पद्मिनी शनैः कामिनीव सुरतक्लमालसा ॥ ५ ॥

दक्त्वैव विभावरीसंज्ञानुगुणं माधवकृतसन्ध्यावर्णनरूपं वस्त्वेव निर्दिशति । जात्विति सायं प्रदोषे मान्तमव्ययं ॥ अत्रेदमवधेयं। कदाचित् कालिन्दीतटारामान्तर्गतलतागृहे राधया दत्तसंकेतो भगवान् मुकुन्दः श्रीदामनामानं सुहृदं तत्र पीठमर्दकृत्यानिर्वहणाय नियुज्य सुदामसंज्ञितेन सुहृदन्तरेण सह कालिन्दीतट एव कथमपि दिनमतिवाहयन् सन्ध्यागमकुतुकितस्ताल्लिंयं सखायं प्रति वर्णयतीति।एतच्च द्वितीययामावसाने स्पष्टीभविष्यति ॥ १ ॥ परिहीयते परिक्षीणो भवति कर्मकर्तरि लट्. सन्निधित्सतीत्यासन्नार्थे दधातेस्सन्। सान्धिवेलं सन्धिवेलायां भवं. "सन्धिवेला...." ( ४ - ३ - १६ ) इत्यण्। ॥ २ ॥ पाशपाणिर्वरुणः. शातकुंभं सुवर्णं ॥ ३ ॥ जातीति भारवाहिनः खलु मन्दमेव चरन्ति।। ४ ॥ सामिसंकुचितं अर्द्धनिमीलितं। हीयमानः कळहंसकस्वनो राजहं-

उद्गतोद्गणमरीचिबुद्बुदं बिंबमंभसि रवेर्निमज्जति।
सायमंबुहरणाय कान्तया पूर्यमाण इव पौरटः कुटः ॥ ६ ॥

कुत्रचित् प्रविरळाः क्वचिद्घना मांसळाः कुहचनाणवः क्वचित्।
अंकुरन्ति दिवि तारकाः क्रमाल्लासिकास्य इव घर्मबिन्दवः ॥ ७ ॥

प्रोषितेऽर्यमणि वल्लभे दिशः क्षामविक्लवमलीमसत्विषः।
मन्थरश्वसनमात्रलक्षिता म्लानतां दधति निष्प्रभैर्मुखैः ॥ ८ ॥

किं न पश्यसि हरेर्हरित् पुनर्बिभ्रती सपदि पाण्डुरं मुखम्।
दर्शनीयनिखिलाकृतिः क्रमाद्गर्भगेन शशिना विभाव्यते ॥ ९ ॥

सव्द्वनिर्य्यस्यां, हीयमानः कळो हंसकस्वनो मञ्जीरशिञ्जितं यस्या इति च "हंसकः पादकटक" इत्यमरः. उन्मुखी ऊर्ध्वमुखी नायकाभिमुखीतिच। स्वपिति निद्राति "रुदादिभ्यस्सार्वधातुके" ( ७-२-७६ ) इतीट्. ॥ ५ ॥ पौरटः सुवर्णमयः कुटो घटः. अत्र सन्ध्यावर्णने उपमानां उत्कण्ठितमाधववाक्यान्तर्गतानां प्रकृतानुगुण्यं सूक्ष्मदृशो विभावयन्तु ॥ ६ ॥ विरळाः स्तोकाः.घनाः सान्द्राः. मांसळाः स्थूलाः. अणवः कृशाः. अंकुरन्ति अंकुरवदुद्गच्छन्ति ॥ ७ ॥ मन्थरेति मन्दमारुतप्रेषणमात्रानुमेयसत्ताकाः श्वासमात्रावशिष्टजीविता इति च ॥ ८ ॥ हरेर्हरित् प्राची। गर्भगेन अन्तर्गतेन आसन्नोदयेनेत्यर्थः भ्रणतां गतेनेतिच॥ ९ ॥ लुप्येति कर्मकर्तरि शानच्। चञ्चलप्रकृति प्रतिक्षणभिन्नरूपं अधीरस्वभावं च ॥ १० ॥ तिर्यञ्चोऽप्येवं मन्मथाज्ञामनुवर्त्तन्ते किमुत म-

लुप्यमानभृशतापमुन्मिषद्रागमुद्घणतमोमलीमसम् ।
चञ्चलप्रकृति शर्वरीमुखं मानसस्य मम साम्यमश्नुते ॥ १० ॥

कोकलोकमिह लोकयाऽऽकुलं शोकपावकविपाकविह्वलम् ।
नातियाति बत तिर्यगप्यसौ मीनकेतनमहीनशासनम् ॥ ११ ॥

ईषदुन्मिषितरोषरूषितं कीर्णकुन्तळभरं वधूमुखम् ।
स्मारयन्नयमुदेति चन्द्रमा धैर्यसारहरणाय कामिनाम् ॥ १२ ॥

स्वैरिणीजननिसर्गवैरिणी चन्द्रिका क्रमधृतातिसान्द्रता ।
उन्नतोत्कलिकमानसस्य मे नेत्रयोर्न रुचये भवत्यसौ ॥ १३ ॥

पश्य काममभिराम्नकौमुदीस्वादिमावगमकोविदा इमे ।
शान्तभीषणतृषः शकुन्तयः केऽपि केळिकुतुकानि कुर्वते ॥ १४ ॥

नुष्या इति भावः महीनो भूपतिः ॥ ११ ॥ रोषरूषणमुदयरागस्थानीयं कुन्तळभरः कळंकस्थानीयश्च ॥ १२ ॥स्वैरिणीति। कुलटाजनस्वैरसञ्चारबाधिनी। उन्नतेति अत्युत्कण्ठितमनसः "उत्कण्ठोत्कलिके समे,, इत्यमरः। न रुचये भवति उद्वेजिका भवतीत्यर्थः ॥ १३ ॥ कौमुदीस्वादिमावगमकोविदाः केपि शकुन्तयश्चकोराः ॥ १४ ॥ चन्द्रिकेत्यादि "तेन वित्तश्चुञ्चुप्चणपौ,, ( ५-२-२६ ) ॥ १५ ॥ अथ कविश्चन्द्रवर्णनद्वारैव कथाबीजमुपन्यस्यति। चार्वेति। एष राधासंकेतभूतः। चिराभिवांछितं चिरप्रार्थितं ॥ १६ ॥ चञ्चलीकेत्यादि आ-

चन्द्रिकाऽऽचमनचुंचुचञ्चव श्चारुचञ्चलदृशाश्चकोरकाः ।
पञ्चबाणशरपञ्जरोदरे पातयन्ति परितो मनो मम ॥ १५ ॥

चारुचन्द्रकरचर्चितोदरो मंजुगुञ्जदलिपुंजमेदुरः ।
कुञ्ज एष कुरुते कुतूहलं चेतसो मम चिराभिवांछितम् ॥ १६ ॥

पश्य मां पवनचञ्चलाञ्चलैः पल्लवांगुलिदलैः स्मरातुरम् ।
चञ्चलीककलनिस्वनोदितस्वागतं स्वयमिवाह्वयत्ययम् ॥ १७ ॥

शीतदीधितिमरीचिवीचिभिर्भासुराभिरभितः कृताप्लुतिः ।
मन्महेऽयमपि मन्महागमं सज्जपुष्पशयनः प्रतीक्षते ॥ १८ ॥

प्रेयसीवदनचन्द्रमण्डलादुज्ज्वलन्नमलचान्द्रिकाङ्करः ।
उन्मदामिह कदानु कौमुदीं प्रापयेद्दिवसदीपिकादशाम् ॥ १९ ॥

ह्वानक्रियाविशेषणमिदं । चञ्चलीका भ्रमराः "इन्दिन्दिरश्चञ्चलीको लोलम्बो बंभरश्च सः" इति त्रिकाण्डशेषः ॥ १७ ॥ मन्महागमं मदुत्सवागमं राधागमनमिति भावः । "मन्महे वयमिवायमप्यहो! दीक्षितः प्रियतमां प्रतीक्षते" इत्यपि पाठः । यथाऽहं सज्जो राधां प्रतिपालयामि तथा निकुञ्जोऽपि किं तामेव प्रतीक्षते इत्युत्प्रेक्षा ॥ १८ ॥ प्रेयसीत्यादि । प्रिया कदाऽत्राऽऽगमिष्यतीति पिण्डितोऽर्थः ॥ १९॥ चन्द्रिकेति । चन्द्रिकैव तिमिरं तेन पूरितान्तरा अभिसारिकाणां हि चन्द्रिका तिमिरायते । यथाऽह मङ्खकः "आलि! कल्पय पुरः करदीपं च-

चन्द्रिकातिमिरपूरितान्तरं स्वैरिणीचरणदूरदुश्चरम् ।
वीक्ष्य मार्गमभिसारसाहसे कातरा किमु भवेत् कृशोदरी ॥ २० ॥

मार! दुर्ललित एष ते सुहृच्चन्द्रमास्त्वदनुजीविनं जनम् ।
सेवनाय तव यान्तमध्वनि द्रोग्धुमिच्छति निवार्यतां द्रुतम् ॥२१ ॥

आदिमोऽयमभिसर्तुमुद्यमो दुस्त्यजं गुरुजनानुवर्तनम् ।
यातयाममपि नाथ यौवनं किं करोतु मदनार्दितापि सा ॥ २२ ॥

उत्तरोत्तरपदे महत्तरं विघ्नसंघमनुधावदाविलम् ।
मामकीनमयि मानसं किमप्यन्धकूपकुहरं विगाहते ॥ २३ ॥

इत्थमुत्सुकमुदीर्य तत्क्षणस्फायमानमदने मधुद्विषि ।
दूनचेतसि दुरन्तचिन्तया श्रान्तवाचि वच आददे सखा॥ २४ ॥

न्द्रमण्डलमिति प्रथितेन। नन्वनेन पिहितं मम चक्षुर्मंक्षु पाण्डुरतमोगुण्ठकेन,, ( श्रीकण्ठचरिते ११ सर्गे ५२ श्लो )दूरदुश्चरं अत्यन्तदुश्चरम्॥ ॥ २० ॥ दुर्ललितो दुरहंकृतः। सेवकाः प्रभुसुहृद्भिः प्रपीडिताः प्रभुनेवाक्रन्दन्ति खलु ॥ २१ ॥ गुरुतरविघ्नान्तरसद्भावात् मदनप्रार्थनमपि व्यर्थमित्याशंकते । आदिम इति । यातयामं चिरप्रवृत्तं "जीर्णं च परिभुक्तं च यातयाममिदं द्वयं" इत्यमरः ॥ २२ ॥ अनुधावत् पर्यालोचयदित्यर्थः। आविलं कलुषं विघ्नसंघविशेषणं वेदम् ॥ २३ ॥ सखा सुदामा ॥ २४ ॥ विमनायमानतामन्तस्तापम् ॥ २५ ॥

अन्तरायचयचिन्तनैरलं सन्त्यजाऽऽशु विमनायमानताम् ।
राधिकापि मदनाधिबाधिता पारयिष्यति चिरायितुं न सा ॥ २५ ॥

सीमलंघनविशृंखलोच्चलन्मीनलांछनरसौघपूरिता.
किं करिष्यति धुनी च कामिनी स्वप्रियाभिसरणोद्यमाद्दते ॥ २६ ॥

अष्टमूर्तिहरिविष्टरश्रवःस्रष्टृमुख्यजयदृष्टवैभवे ।
शम्बरारिविशिखेऽपि वन्ध्यतां शंकमान इह लज्जसे न किम्॥२७॥

व्यर्थशंकितशतानि सन्त्यज स्वस्थतां भज यथोक्तमाचर ।
कृत्यमन्यदिह नावशिष्यते सूत्रधारपदभाजि मन्मथे ॥ २८ ॥

सीमेति । सीमलंघनेन मर्यादातिक्रमणेन विशृंखलं यथा तथा उच्चलन् यो मीनलांछनरसो मन्मथविकारस्तस्यौघेन पूरिता, अन्यत्रतीरोत्प्लुतिनिर्गळेन उच्चलन्मीनांकितेन च जलप्रवाहेण पूरिता। धुनीपक्षे प्रियस्सागरः । उद्यमादिति " अन्याऽऽरादितरर्ते...., ( २-३-२९ ) इति पञ्चमी ॥ २६ ॥ अष्टमूर्तिः श्रीकण्ठः " धरांभोग्निमरुद्व्योममखेशेन्द्वर्कमूर्तिभिः " इत्युक्तेः । हरिरिन्द्रः । विष्टरश्रवा विष्णुः । उक्तं हि हरिणा " शंभुस्वयंभुहरयो हरिणेक्षणानां येनाक्रियन्त सततं गृहकुम्भदासाः " इति ॥ २७ ॥ यथोक्तं यया कान्तया सन्दिष्टं ॥ २८ ॥ रोहिणीति । इदमद्य तुलाभारप्रबन्धेऽपि दृश्यते । वश्यवाचोऽपि कवयः कदाचित् केनापि कुतुकेन एकत्रोक्तमेवार्थं असकृदावर्तयन्ति । यथा भवभूतिः " नैसर्गिकी सुरभिणः कुसुमस्य सिद्धा मूर्ध्नि स्थितिर्न चरणैरवताडनानि " इत्यर्द्धं उत्तररामचरिते प्रथमांके मालतीमाधवनवमांके च

रोहिणीरमणकान्तिधोरणीरामणीयकतृणीकृतिक्षमाम् ।
पास्यसि प्रियतमास्यसम्पदं कौमुदीं द्रुतममी इव द्विजाः ॥ २९ ॥

स्वस्थचित्त इह तद्भवान् क्षणं प्लक्षमूलतळिमे प्रतीक्षताम् ।
तत्प्रवृत्तिमुपलभ्य सत्वरं यावदेष विनिवर्तितुं यते ॥ ३० ॥

विस्मार्षीर्मा स्म घोरस्मरशरविवशो जातु सन्दिष्टकृत्यं
संकल्पानां विकल्पेष्ववहितमनसा रक्षणीयो विवेकः ।
संकेतान्तःप्रवेशं न च कुरु दयितादूतमप्राप्य मोहा-
दित्थं दत्वोपदेशान् प्रियसखसविधान्निर्गतोऽभूत्सुदामा ॥ ३१ ॥

आत्मानं तदनु सुहृद्वचोनुरोधात्संस्तभ्य क्षणमथ विश्लथांगसन्धिम् ।
गोविन्दोऽप्यधिवटमूलमुत्सुकाक्षः प्रेयस्यागमनमहं प्रतीक्षते स्म ।३२।

॥ इतिविटविभावर्यां प्रथमो यामः ॥

---

न्यबध्नात् । आस्यसम्पदं वदनशोभां । अमी इव इति " अदसो मात् (१-१-१२) इति प्रगृह्यत्वादसन्धिः ॥ २९ ॥ इहेत्यंगुल्या निर्दिश्यते । तलमेव तळिमं ॥ ३० ॥ विस्मार्षीरिति । माङ्योगादडभावः । सन्दिष्टेति एवमेवं त्वया विधेयमिति कान्तया सन्दिष्टमर्थं ।

रक्षणीय इति संकल्पद्धदयिताऽह्वानादिकं न कार्यमित्यर्थः । अप्राप्येति उद्यानपालादिभ्यो रहस्यगोपनार्थमिदं । नूनमुपदेशकुशलोऽयं सुदामा । यदयं मदनातुराणां कामुकानां क्वचित् संभाव्यान् प्रमादप्रकारान् स्पष्टं प्रतिपाद्याऽवहितमनसा माधवेन स्थातव्यमित्यनुशास्ति ॥ ३१ ॥ आगमन्नमङ्गमागमोत्सवम् ॥ ३२ ॥

॥ इति विटविभावरीव्याख्यायां चन्द्रिकाख्यायाम् ॥

॥ प्रथमो यामः ॥

---

अथ द्वितीयो यामः

चिन्तापयोधौ विहितावगाहः सन्तापितोऽस्त्रानलपञ्चकेन ।
एकाग्रचेता वटवृक्षमूले ध्याने न्यमांक्षीत् स विटस्तपस्वी ॥ १ ॥

ध्यानैकताने हृदये तदीये मरीचिकावीचिवदाविरासन् ।
असन्निधानेऽप्यमृतायितानि प्रियाचरित्राण्यथ तानि तानि ॥ २ ॥

तपस्वी शोच्यः मुनिश्च। यथा कश्चिन्मुनिः पञ्चाग्निमध्ये स्थित्वा सप्रणिधानं तपः करोति तथाऽयमपि पञ्चशरानलतापितो दयितां ध्यातवानित्यर्थः॥ १॥ मरीचिकावीचिवत् मृगतृष्णातरङ्गपरम्परा इव । असन्निधानेति । विचार्यमाणदशायामप्यमृतोपमानि ॥ २ ॥ अथ मन्मथमनस्यंकुरितानि कानिचित् प्रियाचरित्राण्येव एकादशभिर्वर्णयति । अद्यापीति । पदेति तृतीयान्तं । अत्र मदनोन्मत्तस्य माधवस्य चिन्तासु चित्तचापल्यद्योतनार्थ-

अद्यापि स्फुरतीव मे धुरि दृशोर्यच्चञ्चलापाङ्गया
वेश्मोपान्तविभूषणायितपदा संवीक्ष्य मामध्वनि ।
व्यावृत्यास्यविधुं विलम्ब्य पदयोर्मृन्मार्जनायासकृत्
सोपानोपरि पादघातमपदिश्यालोकितोऽहं मुहुः ॥ ३ ॥

इह तरणिसुतायां जातु नौकाविहारे-
ष्वधितरणि निषण्णा भूषयन्ती गवाक्षम् ।
प्रणयमसृणभावैरीक्षितैः पक्ष्मलाक्षी
तटनिकटगतं मां मोहयन्ती जगाम ॥ ४ ॥

तदैवास्यां किञ्चित्कुटिलितगतिं वीक्ष्य तटिनीं
प्रसार्याङ्गं मद्भयावधि करतलक्षाळननिभात् ।
तिरः पश्यन्त्यां मां पुनरपि वयस्यास्समहसन्
पदेऽन्यस्मिन्नेषा पतति सरितीति श्रितदयाः ॥ ५ ॥

कं श्लोकानां वृत्तवैचित्र्यं इति ध्येयम् ॥ ३ ॥ तरणिसुता कालिन्दी । अधितरणि नौकायाम् । विभक्त्यर्थेऽव्ययीभावः । " द्युमणिस्तरणिर्मित्र " इति "स्त्रियां नौस्तरणिस्तरिः " इति चामरः । गवाक्षं तरणेरेव । ॥ ४ ॥ तदैव नौकाविहारावसरएव । पदेऽन्यस्मिन् एकं पदमतिक्रम्येत्यर्थः । पततीति वर्तमानसामीप्ये भविष्यति लट् । कालिन्द्या अराळगमनत्वात्तटगतस्य ममादृश्यत्वप्रसङ्गे नदीजले पाणिप्रक्षाळनार्थं किल पूर्वकायं गवाक्षद्वारा बहिः प्रसार्य भूयोऽपि मामेव निभाट

अकाण्डबन्धो भवतेऽयमञ्जलिः सारित्तटीमण्डन मण्डपोत्तम।
मया तदाऽऽत्ता किल यस्य ते क्षितौ प्रियाकटाक्षाञ्चलितप्रतीक्षता॥

अन्येद्युराकुञ्चितकण्ठनाळं प्रोष्यागतायाः मधुरस्मितं तत्।
अपाङ्गमालामयकीलजालैरद्यापि मे चेतसि खातमास्ते ॥ ७ ॥

तस्यास्तत्रचिरातियातरजनीवृत्तस्मृतेरुन्मिषत्
संरुद्धं गुरुसन्निधानभयतः कृच्छ्रेण मध्येपथम्।
विश्रान्तद्युति सृक्कणोः प्रसरणादाश्वेतितोष्ठान्तिकम्
साकूतं मधुरस्मितं नयनयोरद्यापि मे तिष्ठति ॥ ८ ॥

एकान्तभाजमुपलभ्य रजस्वलान्तां हन्त स्मराम्यधिगतावसरः परेद्युः।
आदर्शविम्ब इव वित्तमवाप्य निस्वः किं किं न चापलमकार्षमपूर्णकामः॥

यन्ती सा सखीभिरुक्तप्रकारेणाहास्यतेति संक्षिप्तोऽर्थः। सख्युपहासश्रवणं माधवस्य दूरस्थितत्वादसङ्गतमिति चेत् वयस्या माधवस्यैव सखाय इति कल्प्यताम् ॥ ५ ॥ ६ ॥ अन्येद्युरन्यस्मिन् दिने। प्रोष्याऽऽगतायाः प्रवासनिवृत्तायाः ॥ ७ ॥ विश्रान्तेति सृक्कमात्रप्रसरणाद्विरतकान्तिकन्दळम्। "प्रान्तावोष्ठस्य सृक्कणी" इत्यमरः। अत एवेषत्पाण्डरिताधरान्तम् ॥ ८ ॥ हन्त स्मरामीति गर्भवाक्यम् ॥ ९ ॥ सरिदिति यथा रजन्यां नदीतीरद्वयस्थितं चक्रवाकमिथुनं अन्योन्यसङ्गममनवाप्य शोकपर्याकुलं भवति तथा आवामपि अभूवेति भावः ॥ १० ॥ आप्य

विवर्जयन्तावितरेतराङ्गस्पर्शोत्सवं सन्निहितौ रहोऽपि ।
नक्तं सरित्तीरसुगोपविष्टचक्राह्वयद्वन्द्वदशां गतौ स्वः ॥ १० ॥

आश्लेषलोभात् पुरतः प्रसर्पन्नधर्मभीतेश्च निवर्तमानः ।
करो ममाऽऽप्येव वणिक् ससर्पां श्रीखण्डवल्लीं विधृतश्रमोऽभूत् ॥ ११

स्मृतिकारानुपालभ्य विलप्य निजदुर्दशाम् ।
आशास्य च पुनर्वीक्षामगमं बहिरुन्मनाः ॥ १२ ॥

साध्वकरोन्निजकृत्यान्यालिश्चेटी च पीठमर्दश्च ।
संकेतमाप सुमुखी तदपि परेद्युर्न सङ्गमोऽभून्नौ ॥ १३ ॥

अनर्गळं स्वैरमिति प्रवृत्ते चिन्तासमुद्रे चरमस्तरङ्गः ।
औन्नत्यमन्याधिकमेत्य पश्चादागच्छतां प्राक्प्रसरं न्यरौत्सीत् ॥ १४ ॥

लब्ध्वा आङ्पूर्वादापेर्ल्यप् ॥ ११ ॥ स्मृतिकारान् मनुप्रभृतीन् रजस्वलागमननिषेधादिति भावः ॥ १२ ॥ न सङ्गमोभूदिति । दैवयोगाभावादेवेति भावः ॥ १३ ॥ चरमस्तरङ्गः अन्येद्युरावयोर्न सङ्गमोभूदिति पूर्वश्लोकोक्तचिन्ताप्रकार इत्यर्थः । अन्यासाधारणीमुन्नतिमवाप्नुवन्तः कल्लोलाः पृष्ठत आगामिनां प्रतिबन्धकाः खलु भवन्ति । पूर्वेद्युरिवाद्यापि भग्नाशः किमु भवानीत्याशंकया चिन्तासन्ततेरुपरोधोऽभूदिति भावः ॥ १४ ॥ प्रघाणोऽळिन्दः । "प्रघाणप्रघणाळिन्दा" इत्यमरः ।

स्वैरं प्रधावन् सहसा प्रघाणस्थूणाकृतास्फाल इवातिबालः।
स स्वागसैव कथितान्तरङ्गः स्तब्धः क्षणं दिक्षु दिदेशचक्षुः ॥१५॥

सुप्तो नु मूर्छामुत लम्भितो नु भ्रान्तो नु मग्नो विरहाम्बुधौ नु।
एवं दशां स्वां स विकल्पमानो व्यामूढचेता विललाप भूयः ॥१६॥

निद्रा मां नियतं प्रतारितवती का नाम सा प्रेयसी-
संकेतप्रतिपालिनो युवजनस्याः ज्ञातमद्याखिलम्।
सापत्न्यादिह रन्ध्रमाप्य कुटिला व्यामूमुहन्मामियं
नूनं तत् कुत एव कोमळतनोः कष्टं पिशाच्या अपि ॥ १७ ॥

स्वागसेति चिन्तामग्नेन मया दयितागमनप्रतीक्षणं विस्मृतमिति कृत्वा तदेवाऽगः कल्प्यते ॥ १५ ॥ १६ ॥ अथ पूर्वश्लोकोक्तविकल्पकोटि-चतुष्कात् प्रथमामादाय पद्यद्वयेन निद्रामुपालभते ॥ निद्रेत्यादि। कानामेति। सा निद्रा वल्लभागमप्रतीक्षणाय जाग्रतः कामिनो निमेषोऽपि न संपद्यत इति प्रथमतर्को निरस्यते। पुनस्तमेव तर्कमन्यथा स्थापयति आः;ज्ञातामीति। आः इति कोपे पीडायां वा "आस्तु स्यात् कोपपीडयोः" इति नानार्थेष्वमरः।सापत्न्येति रात्रौ जायानिद्रयोर्युगपदेवानुभूयमानत्वान्निद्रायास्सापत्न्यमारोप्यते। तत्सापत्न्यं। यथा कथञ्चित् समानधर्मेणोरेव सापत्न्यप्रसक्तिरिति भूयोऽपि प्रथमतर्कमुन्मूलयाति ॥ १७ ॥ प्रार्थ्यमानमिति तथानिर्द्धारितं। अनेहस्यवसरे ॥ १८ ॥ स्वशापप्रयोगसामर्थ्यप्रतिपादनाय तपस्वितोऽहमित्यन्तं। अधक्ष्यमिति दहतेः क्रियाति-

निद्रे! निन्दामि न त्वां कथमिव कुमतिर्या त्वमभ्यर्थिताऽपि
स्वप्नालोकाभिलाषादहह विरहरात्रीषु दूरं व्रजन्ती ।
दिष्ट्या संकेतभूमाविह तु दयिततया प्रार्थ्यमानागमं मां
गाढं व्यामोहयन्ती पुनरपि विरतेऽनेहसि प्रद्रुताऽसि ॥ १८ ॥

देवस्य विश्वजयिनो मकरध्वजस्य संसेवनेन चिरलब्धतपास्वितोऽहं
शापैरधक्ष्यमधुना यदि जातु काले न त्वां रतान्तसमयेष्ववगवेषयिष्यम्॥

हा धिक् क जीवितसमा नियतन्निवृत्ता
सा स्यात् कथं तदिह नाऽगतवान् स दूतः ।
आगत्य सुप्तमवगत्य च मां गतः किं
संभाव्यते कथमिदं ननु पीठमर्दे ॥ २० ॥

इत्युन्मिषाद्भिर्विविधैर्विकल्पैः पीडालतापल्लवजालकल्पैः ।
व्यामोहितस्यास्य विभिन्नलोमा न्यवर्तताज्ञातकथः सुदामा ॥ २१ ॥

पत्तौ भविष्यति लृङ् । ढत्वे भष्भावे "षढोःकस्सी" (८-२-४१) ति कत्वे रूपम् ॥ १९ ॥ हेति उन्मत्तसाधारणीयमस्थिरता ॥२०॥ अस्येति "षष्ठी चानादर" इति (२-३-३८) भावलक्षणे षष्ठी। विभिन्नेति. अज्ञातकथत्वान् किं माधवेनोच्यत इतिभयात् पुलकितः ॥२१॥ माधवस्यौत्सुक्यं प्रकाशयितुं सेत्यावर्तते ॥ २२ ॥ एकः सुदामा अ-

किं मां वद प्राणसखा प्रशास्ति? कुत्राद्य सा? किं प्रतिपद्यते सा? ।
प्रश्नैरमीभिस्त्वरयन्तमेनमासीत्समाश्वासयितुं स नालम् ॥ २२ ॥

पृच्छावकाशाननवेततत्त्वो यथा यथैको विरळीचकार ।
तथा तथाऽन्यो मुहुरिद्धशंकः प्रश्नान् निजान् पल्लवयांचकार॥२३॥

प्रियाप्रवृत्तेरनभिज्ञतां स्वां जगाद चान्ते विधुरः सुदामा ।
मुमूर्च्छ चाऽशैकबलः स कामी बत द्रुतप्रद्रुतधैर्यशेषः ॥ २४ ॥

अनर्गळोदीर्णझळज्झळोग्रमपाङ्गमार्गेण विनिर्गळन्ति ।
अश्रूणि तस्याश्रममन्वतिष्ठन् वटालवालाम्बुनिषेकक्लृप्तम् ॥ २५ ॥

युगान्तकाले युगपज्जगन्ति संक्षिप्य कुक्षावुदरंभरिर्यः ।
दळे वटस्य स्वयमेव शिश्ये तलेऽमुनाऽक्लिश्यत हन्त तेन ॥ २६ ॥

न्यो माधवः ॥ २३ ॥ २४ ॥ झळज्झळेति । प्रवाहानुकरणं । अ-
श्रममनायासम् ॥ २५ ॥ उदरंभरिरिति । "फलेग्रहिरात्मंभरिश्च"
( ३-२-२६ ) इति सूत्रे चकारस्यानुक्तसमुच्चयार्थकत्वादुदरंभरिरित्यपि इ-
ति व्याख्यातारः । "ज्योत्स्नाकरंभमुदरम्भरयश्चकोराः" इति मुरारिः ।
अक्लिश्यत इति भावे लङ् । कल्पान्तकाले पूरितोदरो दामोदरः स्वार्थैक-
पर इवागणितमहाप्रळयोपप्लवो वटपत्रमध्यं स्वयमेव सुखं यदध्यशेत त-
स्य प्रतीकारोऽयं क्लेश इति च द्योत्यते ॥ २६ ॥ अर्द्धेति पूर्वार्द्धोपा-

अवाप्तसंज्ञं कथमप्ययैनमाश्वासयन्नर्द्धसमस्ययैव ।
प्रचक्रमे वक्तुमनुक्रमशः संरुद्धशोकप्रथिमा सुदामा ॥ २७ ॥

अकाण्ड एव ग्लपितोऽसि हन्त किमित्यकस्मात्तव साहसिक्यम् ।
विलूय मूलं पयसा निषिच्य महीरुहः पोषमुपेष्यतिद्राक् ॥ २८ ॥

अहो अनाकर्णितवाक्यशेषो विकत्थसे पामरनिर्विशेषम् ।
निधित्सते दध्नि समुध्धृताज्ये का नाम गोपी वद मन्थदण्डम् ॥ २९ ॥

वक्रोक्तिभङ्गीभिरलं प्रसीद पातुं प्रियोदन्तीमंम श्रुतिभ्याम् ।
वितर्णिकर्णः शृणवानि सर्वं वृत्तं प्रियाया इति नान्यबुद्ध्या ॥ ३० ॥

तत्सुदामप्रश्नस्य यथोत्तरार्द्धं माधवस्योत्तरं स्यात्तथेति भावः। प्रथिमा बाहुल्यं " पृथ्वादिभ्यइमनिज्वा" ( ५-१-१२२ ) " रऊतोहलादेर्लघोः " ( ६-४-१६१ ) ॥ २७ ॥ विलूयेति मूले च्छिन्ने सलिलसेकः किमर्थक इति लोकोक्तिः। उपेष्यति नोपेष्यतीति विपरीतलक्षणा । अनाहृतप्रियप्रवृत्तिर्भवानेव मे शोकनिदानमित्याशयः ॥ २८ ॥ अहो इति " ओत् " ( १-१-१५ ) इति प्रगृह्यत्वात् प्रकृतिभावः । पामरनिर्विशेषं पामरसदृशं । श्रुते श्रोतव्ये वाक्यशेषश्रवणायासो व्यर्थ एवेति भावः । बहुधा प्रपञ्चितानामपि त्वद्वचसां प्रियावृत्तान्तो नोपलब्ध इति हि पिण्डितोऽर्थः । स च मया ज्ञात एवेति हृदयम् ॥ २९ ॥ अन्येति न प्रिय उदन्त इति बुद्ध्या अपि तु प्रियाया उदन्त एवेति पुनरपि वक्रोक्तिरालम्ब्यते ॥ ३० ॥ खल्विति "अलंखल्वोः,, ( ३-

तद्देहभासेन मयाऽत्र तस्याः प्रवासचिह्नान्युपलक्षितानि ।
मृषानुमानैः खलु मां प्रलोभ्य यथार्थमावेदय तत्र दृष्टम् ॥ ३१ ॥

एकाकिनी गायति कापि तत्र रुध्वान्तरस्मिन्नपरं प्रकोष्ठे ।
व्यापारिता स्याद्गुरुभिर्वराकी नूनं सखीभिस्सह गानगोष्ठ्याम् ॥ ३२ ॥

स्वरेण तां तद्भगिनीमवैमि शिष्टाः पुनर्घोरणया च सुप्ताः ।
संकल्पमूढेन मयाऽप्यदृष्टा संकेतमागादपि नाम बाला ॥ ३३ ॥

एवन्तयोस्सल्लपतोरुदारत्वराण्यपि प्रस्फुटमूकिमानि ।
प्रधावतः कस्यचिदाकुलानि पार्श्वे ततः शुश्रुविरे पदानि ॥ ३४ ॥

उद्दामदावानलवेष्टितानामाकस्मिको घोष इवाम्बुदस्य ।
रवः स सूक्ष्मोऽपि तयोः श्रवस्सु व्यधात्सुधासेचनचाकचक्यम् ॥ ३५ ॥

४-१८) इति प्रतिषेधे क्त्वा ॥ ३१ ॥ अन्तरस्मिन् प्रकोष्ठे बाह्यद्वारे "अन्तरं बहिर्योग,, इति गणसूत्रेण सर्वनामता । गुरुपारतन्त्र्यमागमनप्रतिबन्धकं स्यादित्याशंका ॥ ३२ ॥ घोरणा नाम सुप्तानां निश्वासोच्छ्वासाभ्यामुत्थापितः शब्दविशेषः "घोर शब्द ,, इति तौदादिकाल्युट् । अपि नाम इत्याशंसायाम् ॥ ३३ ॥ पदानि पदक्रमशब्दाः पीठमर्दानां किल प्रकृतिसिद्धोऽयं निश्शब्दसञ्चारः ॥ ३४ ॥ आकस्मिक इति " तत्र जात,,इति ठकि"अव्ययानां भमात्र,, इति टिलोपः । चाकचक्यं चकचकभावं चमत्कारविशेषम् ॥ ३५ ॥ अव-

क्षणाच्च ताभ्यामवधारितात्मा गीर्भिस्त्वरोदित्वरगद्गदाभिः ।
एह्येहि यामेत्यसकृद्ब्रुवन् स द्वित्रैः पदैरन्तिकमाससाद ॥३६॥

सान्द्रानन्दस्साधुसंभावनाभिः श्रीदामानं मानयामास शौरिः।
संकेतस्थप्रेयसीमुक्तदूतं प्रत्युद्यातुं संरभन्ते ह्यभीकाः ॥ ३७ ॥

श्रीदामा निजपीठमर्दपदवैदग्ध्यं सुदामा पुनः
स्वस्याश्वासनकौशलं मुररिपुः स्वं धैर्यमन्यादृशम् ।
एकैकोऽपि कुतूहलादिति निजं चातुर्यमस्तौत्समे
संभूयाथ च राधिकामिति तदा कोलाहलः कोऽप्याभूत्॥३८॥

सपदि स ससुहृत् प्रतिष्ठमानो दयिततमानिलयायितं निकुञ्जम् ।
मुखमथ बिभराम्बभूव शौरिर्मुदिरविनिस्सृतचन्द्रचारुशोभम्॥३९ ॥

॥इति विटविभावर्याम् द्वितीयोयामः॥

धारीतीति पीठमर्दकृत्याय प्रेषितः श्रीदामाऽयमिति व्यक्तिविशेषेण निर्द्धारितः । यामेति लोटो मस् ॥ ३६ ॥ ३७ ॥ अस्तौदिति स्तौतेरादादिकाल्लङ् । समे सर्वे संभूय मिळित्वा राधिकामस्तुवन् ॥ कामुकानां तत्सहकारिणां च स्वभावोऽयम् ॥ ३८ ॥ मुदिरो मेघः "घनजीमूतमुदिरे"त्यमरः । बिभरांबभूव बभार "भीह्रीभृ„ ( ३-१-३९ ) इति आम् श्लुवद्भावश्च ॥ ३९ ॥

इति श्रीविटविभावरीव्याख्यायाम् चन्द्रिकाख्यायाम्
॥ द्वितीयो यामः ॥

॥ अथ तृतीयो यामः ॥

चोदितो नु मदनाशुगतोत्रैः कालितो नु दयितागुणजालैः ।
आस्थितो नु स मनोरथमेव प्रस्थितः पृथुजवं प्रचचाल ॥ १ ॥

कामुकः स दयितामभिसर्पन् वामलूरकमबुध्यत सालम् ।
पल्लवान् परममन्यत शूकान् गोष्पदान्यगणयद्गहनानि ॥ २ ॥

सोऽकरोत् सुपथि कापथभीतिं द्वारबुद्धिमाधीभीत्ति बबन्ध ।
ध्वान्तसंकटमवाप शशांकादिन्द्रजालमतनोरतिचित्रम् ॥ ३ ॥

उन्मिषत्पुळककंचुकिताङ्गः केशवः कलितधीरभिसारे ।
कुर्वतस्तत इतो गतिविघ्नं कण्टकान् पथि तृणाय न मेने ॥ ४ ॥

नातिदीर्घमपि दुर्वटचारं नीतयानयनमापदुदारम् ।
सोऽगमत्सपदि वीरुदगारं स्वागतोन्मुखसखीप्रतिहारम् ॥ ५ ॥

मदनाशुगैरेव तोत्रैः तोदनदण्डैः " तोत्रं तु व्राजने वैणकेऽपि च " इति विश्वः। दयितागुणैरेव गुणैः कालितः आकृष्य सन्निधिं नीत इत्यर्थः । यथा " कार्यकालं संज्ञापरिभाष"मित्यत्र । मनोरथमेव रथमास्थितः आरूढः । पृथुजवमतिशीघ्रं ॥ १ ॥ वामलूरकं वल्मीकं। स्वार्थे कः "वामलूरश्च नाकुश्च वल्मीकं" इत्यमरः । दयितागृहान् गच्छतोऽस्य पथि प्राकारा नाकुमात्राः कण्टकाः पल्लवकल्पाः दुर्गाणि गोष्पदप्रमाणा-

द्वारदेशविनिवेशितदूतो दूरदुःश्रवपदक्रमशब्दः ।
व्याकुलाळिविनिवेदितमार्गो वेश्म तत्स विशति स्म विलासी ॥६॥

मारुतावधुतपर्णकदंबान्मन्दमुच्चरति मर्मरशब्दे ।
सत्वरावहितसादरकर्णं स्वागमाय सहसा स्पृहयन्तीम् ॥ ७ ॥

सान्द्रतापविवशामपि कार्श्ये सुन्दरस्वरुचितुन्दिलिताङ्गीम् ।
मन्दकन्दळितरागमनोज्ञामैन्दवीमभिनवामिव लेखाम् ॥ ८ ॥

क्षामभासमुपवासविरामे पारणक्षणविळम्बविहस्ताम्
बाष्पवारिविहिताप्लवकल्यां दृष्टिमिष्टदिशमाशुनयन्तीम् ॥ ९ ॥

नि च बभूवुरित्यर्थः॥ "गोष्पदं सेवितासेवितप्रमाणेषु" (६-१-१४५) इति निपातनात् साधुः ॥ २ ॥ सुपथीति "न पूजनात्" (५-४-६९) इति समासान्तनिषेधः ॥ ३ ॥ अभिसारे अभिसरणे युद्धयात्रायामिति च । कण्टकान् शूकान् क्षुद्रशत्रूंश्च "सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः" इत्यमरः । तृणायेति "मन्यकर्मण्यनादर" इत्यनेन चतुर्थी ॥ ४ ॥ नीतवानतिवाहयन् । अयनं मार्गं । आपदुदारं अनर्थबहुलं। वीरुदगारं लतागृहं । स्वागतोन्मुखी प्रत्युद्यानसन्नद्धा सख्येव प्रतिहारो यस्य तत् । स्वागतेति श्लोकवृत्तमपि सूचितं ॥ ५ ॥ ॥ ६ ॥ अथ पञ्चभिः कुळकेन नायिकां वर्णयति । वातधूतपत्रध्वनिते स्वकान्तपादन्यासशब्दाशंसां कुर्वतीं प्रेयसीं प्रियतमो ददर्शेत्यन्वयः॥७ नूतनशशिकलापि समन्ततः प्रसारिभिमयूखैर्निबिडगात्री रक्तिमलेशतरञ्जिता च लक्ष्यते ॥ ८ ॥ कान्तागमनप्रतीक्षणमेवोपवासः । पार-

अन्तरान्तरनुचिन्त्य दुरन्तानन्तरायनिवहान् विलपन्तीम् ।
देवता अथ मनोरथसिद्धिं सेविता असकृदर्थयमानाम् ॥ १० ॥

पार्श्वगप्रियसखीकरलीनां पाणिपद्मधृतपाण्डुकपोलाम् ।
प्रेमभूमपरिमार्जितचक्षुः प्रेयसीं प्रियतमोऽथ ददर्श ॥ ११ ॥

आशिरस्पदपरस्परगात्राण्यातुरे प्रथममेव हि दृष्टी ।
ऊढमोदमुपगूह्य तयोर्द्रागूहतुः कमपि सम्मदमुच्चैः ॥ १२ ॥

अङ्कैरथ तयोरुभयोरप्युन्मिषत्पुळकपाळिनिचोळैः ।
आशुभाविकुसुमायुधयुद्धे बद्धवर्मभिरिवाविरभावि ॥ १३ ॥

स्तम्भसम्भ्रमविहस्तमभीक्ष्णं श्लक्ष्णमात्मदयिताकरपद्मम् ।
धार्यमाणमथ साध्वापि सद्यः स्विद्यतोऽच्युतकरात् च्युतिमाप ॥ १४ ॥

णोति इतः परं विळम्ब मसहमानां । दृष्टिविशेषणानीमानि ॥ ९ ॥ अन्तरा मध्ये ॥ १० ॥ ११ ॥ आशिर इति । शिरस आरस्य पदपर्यन्तानि सर्वाण्यप्यङ्गानीत्यर्थः । ऊहतुरिति वहेर्लिट् । ॥ १२ ॥ निचोळः कंचुकं "निचोळः प्रच्छदपटः" इत्यमरः । बद्धवर्मभिः आमुक्तकंकटैः सन्नद्धैः । आविरभावि भावे लुङ् । ॥ १३ ॥ दयिताकरपद्ममच्युतकरात् च्युतिमापास्खलदित्यन्वयः । अनेन सात्विकविकारेषु नायिकायास्तम्भो नायकस्य स्वेदश्च वर्णितः ॥ १४ ॥ सार्थकानि समानप्रयोजनानि तुल्यार्थानीति च । पदानि लक्ष्माणि शब्दांश्च ।

सार्थकानि सुबहून्यथ पश्यन् हर्षसंभ्रमभयादिपदानि ।
एकतस्समुदितानि तयोर्हृद्येकशेषमकरोत् स्मरसूरिः ॥ १५ ॥

सत्वरोपसृतसख्युपादिष्टं पुष्पतल्पमथ सेवितुकामः ।
माधवः स्वसविधं विधुरान्तामंकपालिवलयेन निनाय ॥ १६ ॥

पश्यतः परिजनस्य समक्षं व्रीडिताऽपि सपदि प्रियपाणिम् ।
स्पर्शसम्मदजडैर्निजगात्रैः साऽशकत् कृशतनुर्न निरोद्धुम्॥ १७ ॥

कंचुळीमनु निकुञ्चितमेकं काञ्चिलग्नकटकाञ्चलमन्यम् ।
कान्तपाणिकमलान्तमुदीक्ष्य क्रान्तमाळिभिरथान्तिकभूमेः॥ १८ ॥

गूढगूढमपसारितपादं मन्दपमन्दमसार्पितुकामाम् ।
सा विकृष्य वसनेन वयस्यां पार्श्व एव विनिवेशयति स्म॥ १९ ॥

हर्षसंभ्रमादिविकाराणां युगपदुदयेऽपि स्मरप्रभावात् तत्रैको हर्ष एवेत-रानतिचक्रामेत्यर्थः । एकस्यामेव विभक्तौ दृष्टानां समानार्थकानां हर्षा-दिपदानां स्मरनामकवैयाकरणेन एकशेषः कृत इति श्लेषसंसृष्टा समा-सोक्तिः ॥ १५ ॥ सेवितुकामेत्यत्र " तुं काममनसोरपि ,, इतिमलो-पः । अंकपालिवलयेन क्रोडमण्डलेन आलिङ्गयेति यावत् । "आलिङ्ग-नमपि क्रोडीकरणं चांकपाल्यपि " इति यादवः ॥ १६ ॥ समक्षं प्रत्यक्षं अव्ययीभावः । अशकदिति शक्नोतेर्लुङ्च्यङ् ॥ १७ ॥ कंचु-ळी स्तनावरणवस्त्रं । काञ्चिर्मेखला । क्रान्तमपाक्रान्तमिति भावे क्त

चारिताऽपि चतुराऽथ सुशीला गन्तुमेव मुहुरुत्सहते स्म ।
स्वैरचारिनिजयूथवियुक्ता वागुराहतपदा हरिणीव ॥ २० ॥

मन्मथासहनमानसवृत्तौ माधवे निरपराधमथ स्वम् ।
सन्दिदर्शयिषुराप्तवयस्या प्रस्तुतानुगुणमेवमवादीत् ॥ २१ ॥

मुञ्च मुञ्च सिचयाञ्चलमेतद्धिक्तव प्रतिकृतिव्यसनित्वम् ।
सादरं स्पृशति सागसि जाग्रत्यग्रतोऽपि यदनागसमेव ॥ २२ ॥

यस्य चित्रमनुचुम्ब्य सरागं "योजयैनमयि चेतनये"ति ।
वक्ष्यसि स्मरसि तं घटयन्त्याः पारितोषिकमयं मम रोषः? ॥ २३ ॥

॥ १८ ॥ अपसारितपादमित्यपसर्पणक्रियाविशेषणम् ॥ १९ ॥ सुशीलेति सख्यास्संज्ञा । वागुराहतपदा कूटयन्त्राकृष्टचरणा । "वागुरा मृगबन्धिनी,,त्यमरः । हरिणी मृगी ॥ २० ॥ माधवे विषये स्वमात्मनं निरपराधं सन्दिदर्शयिषुः प्रतिपादयितुकामा ॥ २१ ॥ यत् प्रतिकृतिव्यसनित्वं प्रतीकारसंरम्भः । सागसि चेलाकर्षणादपराद्धे माधवे अग्रतो जाग्रत्यपि अनागसं मामेव स्पृशति तदेतत्तव प्रतिकृतिव्यसनित्वं धिक् " धिगुपर्यादिषु ....,,इति द्वितीया । नायिकाकृतं स्ववस्त्राकर्षणं अन्यथा प्रतिपादयति सखी । "सिचयो वस्त्रं वसनमंशुकं,, इति यादवः ॥ २२ ॥ एनं चित्रविलिखितं नायकं चेतनया योजय जीवयेति वक्ष्यसि यदवोचस्तत् स्मरसि "अभिज्ञावचने लृट्,, (३-२-११२) इति भूते लृट् । पारितोषिकं प्रतिफलम् ॥ २३ ॥ मुग्धे मूढे वरं मनाक् प्रियम् । इतरजनसन्निधावेव त्रपायोगादिति भावः

वल्लभेन शिथिलीकृतनीविर्व्रीडिता भवसि चेन्ननु मुग्धे! ।
मादृशां किमु न पश्यसि साक्षात्कारतो वरमसन्निधिमेव ॥ २५ ॥

चन्द्रिकाभिसरणे तव न ह्रीः सा भृशं पुनरुपांशु विहारे ।
किं वृथा प्रलपितैरयि मुग्धे! वामदृक् भवसि सत्यमिदानीम् ॥२९॥

यद्वियोगविधुरा मुहुरस्मान् रोदयस्यनुदिनं स्ववयस्याः ।
अद्य तस्य सविधे सभियस्ते वाचमन्यथयते बत चेष्टा ॥ २६ ॥

चण्डि! केळिकुतुकेन निजाळीः कातरा विधुरयिष्यसि मन्ये ।
ज्ञातमद्य वयमीदृशकेळीर्नो जडा अपि सहेमहि भूयः ॥ २७ ॥

॥ २४ ॥ सा ह्रीः उपांशु रहसि "रहश्चोपांशु चालिङ्ग ,, इत्यमरः । वामदृक् विपरीतदृष्टिः वस्तुतस्तु सुदृक् ॥ २९ ॥ अन्यथयते अन्यथा करोति अनृतां कुरुत इत्यर्थः तत्करोतीति णिचि इष्ठवच्चेत्यतिदेशेन भसंज्ञायां अव्ययत्वाट्टिलोपे च रूपसिद्धिः ॥ २६ ॥ अथ "वाचमन्यथयते,, इति पूर्वश्लोकोक्तमर्थं सोपहासमाह । चण्डीति । हे चण्डि! शठे अनेन परिहासेषु क्रौर्यं त्वयि संभाव्यमेवेति समर्थ्यते कातरा भीरुः । अतस्सखीनामार्जवं व्यज्यते । निजाळीः स्ववयस्या अस्मान् विधुरयिष्यसि व्याकुलाः करिष्यामीति केळिकुतुकेन हेतुना मन्यसे किमित्युपहासः "प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च ,, ( १-४-१०६ ) इति मद्ध्यमोत्तमयोर्व्यत्ययः । नायकविरहे यद्यच्चापलं त्वमाविष्करोषि तत्तत् परिहासमात्रफलकं । न तु यथार्थमित्याशयः । ज्ञातमद्य अधुना सङ्गमे तव चेष्टां साक्षात्कुर्वत्या मया वास्तवं तव हृद्गत-

भ्रुयुगं ननु भनक्षि किमर्थं तर्जनीं नटयसेऽद्य वृथैव ।
भीषिकाम्य इह ते न बिभेमि प्रस्थिताऽस्मि कुपिताऽसि हि मह्यम् ।

इत्युदीरितवतीमथ शौरिः "द्वारि तिष्ठति सखाऽद्य ममैकः ।
अस्मदर्हति स नैवमवज्ञामर्हयैन„मिति तां स्म नियुङ्क्ते ॥ २९ ॥

शंसतैव धृतगौरवमेवं स्रंसिते सपदि नीविनिवेशे ।
तद्ररुत्सुतरुणीकरपाशभ्रश्यमानवसना निरगात्सा ॥ ३० ॥

वीरपाणमधरामृतपानैः कुर्वतोः पुलककंचुकभाजोः ।
कामिनोः कटकताडिततूर्यं मान्मथं प्रववृतेऽथ समीकम् ॥ ३१ ॥

उन्नतस्तनमहीधरचारी प्रस्खलन् प्रणयिपाणिरधोऽधः ।
विश्लथांगमवलुङ्घ्य नितम्बे निष्पतन् स्तिमिततां प्रतिपेदे ॥ ३२ ॥

मवगतमित्यर्थः । स्पष्टं अन्यत् । सहेमहीति सहतेर्लिङ् । ईदृशपरिहासा-नां अवसरं न दास्याम इत्यर्थः । केळिरित्यत्र " द्रवकेळिपरीहासा„ इत्य-मरेणाम्नातेऽपि महाकविप्रयोगानुसारात् स्त्रीलिङ्गम् ॥ २७ ॥ भनक्षीति रौधादिकस्य भञ्जेस्सिप् । नटयस इति घटादित्वान्मित्वं । म-ह्यमिति " क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः " इति चतुर्थी ॥२८॥ अर्हय पूजय सम्भावय २९ ॥ धृतगौरवं परिहासशंकावारणायेदम् ॥ ॥ ३० ॥ वीरपाणं युद्धारम्भे निर्वर्तितं पानं "वीरपाणं तु यत् पानं वृ-त्ते भाविनि वा रणे " इत्यमरः ॥ ३१ ॥ अधोऽधइति सामीप्ये द्वि-

नूतनोदितविधोर्विजयं स्वं स्विद्यते वरतनोर्वदनाय ।
वर्णयन्नपजहार स वीटीं पूर्णपात्रमथ तस्य सकाशात् ॥ ३३ ॥

चित्तजन्मसदनं प्रविशन्तं चित्ततस्करकरं समुदीक्ष्य ।
मद्ध्यमाशु बलिनं प्रतिहारी क्रन्दति स्म रशनामणिरुच्चैः ॥ ३४ ॥

कामुके किमपि चापलमूरुस्तम्भमूलसविधे विदधाने ।
सा श्रुतिप्रणयिनी प्रणयिन्या दृष्टिराशु निमिमील विलक्षा ॥ ३५ ॥

प्राणनाथरदनच्छदसारे पीतमात्र इह पेशलगात्र्याः ।
सीत्कृतानुमितसत्वरशान्तिर्निर्ववौ विरहघोरकृशानुः ॥ ३६ ॥

भावः । स्तिमिततां स्तब्धतां ॥ पर्वतशिखरात् भ्रष्टाः किलाधोऽधस्खलित्वा सानौ पतन्तः क्षणं स्तब्धा भवन्ति ॥ ३२ ॥ स्वं वदनसम्बन्धि स्विद्यते स्वेदबिन्दुकिताय उदयकालसंसक्तसमुद्रसलिलबिन्दुसुन्देरेन्दुबिंबसाम्यसम्पादनार्थमिदम् । यथा कश्चित् सेवको राज्ञे नवाभ्युदितशत्रुजयमुपहृत्य उत्तरीयादिपारितोषिकं हठादाकर्षति तथेति भावः" हर्षादुत्सवकालेयदलंकारांबरादिकं । आकृष्य गृह्यते पूर्णपात्रं पूर्णानकं च तत्" इति हारावली ॥ ३३ ॥ चित्ततस्करो दयितः "तद्वहतो...."इति सुट् ॥ बलिनं वलिसहितं "वलिनो वलिभस्समौ" इत्यमरः । बलशालिनमिति च । हारी मनोहरः प्रतिहरी द्वारपालिकेति च। "रत्नं मणिर्द्वयो" रित्यमरः। दुर्बला ह्यापत्सु बलवन्तं मद्ध्यस्थमाक्रन्दन्ति ॥ ३४ ॥ श्रुतिप्रणयिनी कर्णान्तस्पर्शिनी वेदरासिका च ॥ ३५ ॥

स्वस्य मन्मनमनोरुपदेशं कुर्वते प्रियमुखाय मृगाक्ष्याः ।
दक्षिणामकुरुत श्रुतियुग्मं कुण्डलेन विपरीतरतेषु ॥ ३७ ॥

मन्मथोपनिषदामथ सारं मानयन्मणितमन्त्रमुदारम् ।
केवलप्रमदभूमनि कल्ये केशवः कचिदसीम्नि निलिल्ये ॥ ३८ ॥

भ्रष्टो बंभ्रमदभ्रगर्भविवरेभ्योऽदभ्रभो भव्रजः
प्राप्ताकाण्डतमस्समागममखण्डाचण्डगोर्मण्डलम् ।
आ मूलाच्चलिता शिलोच्चयतटी झांकारिणश्चानिलाः
क्षोभारम्भमुदित्वरं स्मरपुरस्याऽसूत्रयाञ्चक्रिरे ॥ ३९ ॥

॥ ३६ ॥ मन्मनमनोः मन्मनमन्त्रस्य दम्पतिभ्यामन्योन्यकर्णे जप्तं र-हस्यं मन्मनशब्देनोच्यते । यथाऽऽह हारावलीकृत् " सुरते कर्णदेशेषु यच्च देशीयभाषया । दम्पत्योर्जल्पितं मन्दं मन्मनं तद्विदुर्बुधाः " इति । मन्त्रोपदेष्टारः किल दक्षिणामर्हन्ति ॥ ३७ ॥ मणितं रतिकूजितं क-ल्ये निर्मले परिशुद्धे उपनिषद्भिर्देवताराधनं कुर्वतो ब्रह्मानन्दे लयो युक्त एवेति भावः ॥ ३८ ॥ भ्रष्ट इति । बम्भ्रमतां कुटिलं चलतां "नित्यं कौटिल्ये गतौ ,, ( ३-१-२३ ) इति कौटिल्यार्थकस्य यङो लुक् । अभ्राणां मेघानां गर्भविवरेभ्य उदरसुषिरेभ्यः भ्रष्टोऽदभ्रभो बहुलशो-भो भव्रजस्तारकानिकरः तत्सादृश्यान्निर्गीर्णा केशपाशाद्गलिता कुसुमा-वलिः । प्राप्ताकाण्डतमस्समागमं असमय एव राहुग्रस्तं । अखण्डाचण्डगोः पूर्णचन्द्रस्य मण्डलम् । तत्समानं मुखम् । आमूलान्मूलत आरभ्य च-लिता कम्पिता शिलोच्चयतटी पर्वतसानुः तत्सदृशी कुचतटी । झांकारि-

चतुरोच्चलितोच्चकुचोच्छ्र्यतश्चटतस्ताडिति स्फुटहारमणीन् ।
पततः परितः किरती सुदती विविधं विदधे विपरीतरतम् ॥ ४० ॥

द्रुतविळम्बितदुर्मदडम्बरस्समजनि क्रमशोऽङ्गजसङ्गरः ।
सुमशरोऽप्यवरोप्य निजं धनुश्चिरपरिश्रमविश्रममन्वभूत् ॥ ४१ ॥

आरामसीमानि निलीय वसन् प्रसूनमालोक्य युगमन्तराममत्र मे ग्रान्ते
रन्ध्रप्रतीक्षणचणश्शनकैरुपेत्य घर्माम्बुहारमहरत् पवमानचोरः ॥ ४२ ॥

अमन्दकन्दळत्प्रमोदसागरोदरस्फुर-
त्तरङ्गभङ्गिसङ्गमानुषङ्गमङ्गळाङ्कितौ
परस्परानुरागसम्पदं सुखेन दम्पती
वितेनतुश्चिराय चारु चारितार्थ्यचुम्बिनीम् ॥ ४३ ॥

णोऽनिलाः वातूलास्तादृशा निश्वासाश्च । स्मरपुरस्य मन्मथनगरस्य जव_नस्य उदित्वरमुदयिनं क्षोभारम्भं चलनसमारम्भं जनक्षोभरूपमुपप्लवं च आसूत्रयाञ्चक्रिरे सूचयामासुः । केशवान्तकुसुमादिभिर्जघनक्षोभोऽनुमेयोभूदीति भावः । पुरुषायितवर्णनमेतत् ॥ ३९ ॥ तडितीत्यनुकरणम् ॥ ४० ॥ द्रुतविळम्बितः क्षणान्मन्दीभूतो दुर्मदडंबरो दुरहंकारोच्छ्रायो यस्य तादृशः द्रुतविलंबितेति वृत्तसंज्ञाऽपि सूचिता ॥ ४१ ॥ आरामपवनस्तयोस्सुरतग्लानिमपनुनोदेति भावः ॥ ४२ ॥ चारु यथाभिलषितं पञ्चचामरं वृत्तं ॥ "लघुर्गुरुर्निरन्तरो भवेत्तु पञ्चचामरं"

निधुवनरभसान्ते गाढसंसक्तगात्रं तुहिनमहनमनिस्वेदवमानं शरीरैः
मिथुनमथ तदन्तः केवलानन्दमीलीकमलितकरणाली कामपि प्राप मूर्च्छाम्

॥ इति विटविभावर्याम् तृतीयो यामः ॥

---

इति लक्षणात् ॥ ४३ ॥ निधुवनरभसः सुरतवेगः " रभसौ हर्षवे-
गोरिति,, विश्वः । तस्यान्ते भावकाभ्यन्तरमिति यावत् । करणाली इ-
न्द्रियदशकम् । कामपि मूर्च्छां निद्राम् ॥ ४४ ॥

इति श्रीविटविभावरीव्याख्यायाम्

चन्द्रिकाख्यायाम् तृतीयो यामः

---

अथ तुरीयो यामः

अचिरोदितभव्यकाव्यकान्तिस्पृहणीयाऽपि विभावरी तदानीम् ।
अभवत्त्वरमाणशेषयामा धुतदोषाकररुक् प्रभातकल्पा ॥ १ ॥

अथ प्रभातवर्णनमारभते । काव्यः शुक्रः काव्यं कविकर्मेति च । वि-
भावरी रात्रिः । विटविभावरीसंज्ञोऽयं ग्रन्थश्च । शेषयामश्चरमयाम उभ-
यत्र । दोषाकररुक् चन्द्ररश्मिः । दोषसमूहरूपो रोगश्च । प्रभातकल्पा
ईषत्प्रभाता । ईषदसमाप्तशोभा च ॥ १ ॥ स्वकान्ता इति " अ-

अवलोक्य सुधाकरोऽपि सर्वानथ राधामधुवैरिणोर्विलासान् ।
परिरब्धुमिवौषधीः स्वकान्तास्त्वरमाणश्चरमाचलं जगाहे ॥ २ ॥

मृदुलोलितमौलयस्तदानीं प्रतिवेश्म श्रुतियोगलोभनीयम् ।
असकृत्त्रिविधं स्वरप्रपञ्चं जुघुषुः श्रोत्रियगातृताम्रचूडाः ॥ ३ ॥

हृदि मारशराग्रकृष्टपूर्वे स्रवदस्राम्बुनि खण्डिताजनस्य ।
अकिरत् परितः परागभङ्ग्या पृषदश्वः पृथुशोकबीजजालम् ॥ ४ ॥

अविशत् करशोभिमण्डलाग्रः सरमाकान्तपदानुसारिमार्गः ।
मृगयार्थमिवापराद्रिसीमां मृगयूनाद्रियमाण एष राजा ॥ ५ ॥

षधीशो निशापतिः" इत्यमरः ॥ २ ॥ मौलिः शिरश्चूडा च । श्रोत्रियपक्षे श्रुतिर्वेदः । गातृपक्षे "प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः । सा श्रुतिस्सम्परिज्ञेया स्वरावयवलक्षणा" इत्युक्तलक्षणस्सङ्गीतशास्त्रप्रसिद्धश्शब्दविशेषः । कुक्कुटपक्षे श्रुतिः श्रवणम् । त्रिविधमिति एकत्र उदात्तानुदात्तस्वरितस्थानभेदैः । अन्यत्र विलम्बितमध्यद्रुतकालभेदैः । ह्रस्वदीर्घप्लुतमात्राभेदैः । उक्तं च "ऊकाल....,, (१-२-२७) इति सूत्रे श्रीनारायणभट्टेन "क्रमादेकद्वित्रिमात्रा उवर्णाः कुक्कुटस्वने । प्रसिद्धाः,, इति ॥ ३ ॥ अस्रमश्रु "अस्रमश्रूणि शोणितं,, इति विश्वप्रकाशे "ज्ञातेऽन्यासङ्गविकृते खण्डितेर्ष्याकषायिता,, इति भरतः । पृषदश्वो वायुः । कृष्टे क्षेत्रे वृष्ट्यनन्तरं बीजवापो युक्त एवेति भावः

निजगोप्रसरप्रसादितांशो बत सर्वज्ञशिखामणौ गतेऽस्तम् ।
तिमिरार्णव ऊर्णनाव विश्वं न बुधो नाऽपि कविश्चिरं चकाशे ॥६॥

चिरनर्त्तनधूसरांशुकान्ते लघु निष्क्रामति शीतगौ युरङ्गः ।
तमसा पिदधे तिरस्करिण्या नवरागस्य रवेः प्रवेशनाय ॥ ७ ॥

परागभङ्ग्या परागव्याजेन ॥ ४ ॥ करेति । रश्मिशोभिबिम्बाग्रः पाणौ कृपाणं कलयन्निति च । रमेति रमाकान्तस्य विष्णोः पदमाकाशं मार्गो यस्य सः । सरमाकान्तानां विश्वकद्रूणां पदानुसारी भिर्निर्यासानुसारी मार्गो यस्य स इति च । "सरमा शुनी,, इत्यमरः। मृगयूना अंकमृगेणाद्रियमाणः सम्भाव्यमानः । मृगयून् लुब्धकानाद्रियमाणः सम्भावयन्निति च " व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः,, इत्यमरः । तौदादिकस्य ङित आद्रियतेः कर्तृकर्मणोस्समानं रूपं। स एव राजा सर्वरात्रं प्रकाशमानः स चन्द्रः प्रसिद्धः कोऽपि नृपश्च । राजानो हि प्रभाते आखेटाय पर्वतविपिनं व्याधसारमेयादिभिरनुसृताः प्रविशन्ति ॥ ५ ॥ गौ रश्मिर्वाणी च । सर्वज्ञशिखामणौ शिवशिरोभूषणे चन्द्रे कस्मिन्नपि महापण्डिते च। ऊर्णनाव तिरोदध "ऊर्णोतेराम्ने,,ति वार्त्तिकेणाम्प्रतिषेधः । बुधकवी ग्रहविशेषौ विद्वत्कवयितारौ च। यथा कस्यचन महापण्डितस्यानन्तरं अभिनन्दकाभावात् विद्वांसो न शोभन्ते तथा चन्द्रास्तमयात् शुक्रादिग्रहा न रेजिरे ॥ ६ ॥ चिरेति। चिरनर्तनेन धूसरो मलीमसोंऽशुकान्तश्चेलाग्रं यस्य तस्मिन् । तादृशैरंशुभिः रश्मिभिः कान्ते रम्ये च । शीतगौ चन्द्रे कस्मिंश्चिन्नटे च । लघु द्रुतं निष्क्रामति निर्गच्छति सति। नवरागस्य उदयरागाञ्चितस्य नूतनवर्णकस्य च रवेः भानोः पात्रान्तरस्य च प्रवेशनाय योगगगनमेव र-

मिहिरस्य करग्रहे कपोतद्विजलोके विहिताकुली समन्तात् ।
वसुभूर्व्यधितोडुलाजहोमं नवसन्ध्यार्चिषि साम्धकारधूमे ॥ ८ ॥

रमणं क्षणमागतं प्रवासात् कथयन्नर्यमणं सरोरुहिण्यै ।
सरसीरनु सौखरात्रिकोऽगान्मधुपौघो मधुपारितोषिकार्थी ॥ ९ ॥

उदरोल्लसदर्यमाणि निर्यद्द्युतिशोणिकमनोज्ञविभ्रमाणि ।
उदयाचलगह्वराण्यभूवन्नथ बाणासुरसालसुन्दराणि ॥ १० ॥

परितो दरघोषिभिः पतद्भिर्महितो भास्करमस्करी सदण्डः ।
इत एष्यति रञ्जितम्बरान्तो ननु का का त्वमिहेत्यकूजि काकैः ॥ ११ ॥

हा नाट्यशाला तमसैव तिरस्करिण्या जवनिकया पिदधे तिरोदधे क-
र्मणि लिट् ॥ ७ ॥ मिहिरस्य रवेः करग्रहे रश्मिसम्पर्के पाणिग्रहणे
च । पूर्वत्र सम्बन्धे षष्ठी । उत्तरत्र तु कर्त्तरीति विवेकः । कपोतद्विजाः ग्रा-
म्यतपक्षिण एव द्विजा विप्राः । रविकिरणसम्पर्काद्दिवि तारका अदृश्य-
तामापुः ॥ ८ ॥ अर्यमणमिति । "इन्हन्पूषार्यम्णां शौ" ( ६-४-
१२ ) इति नियमान्न दीर्घः । सरसीरन्विति " लक्षणेत्थंभूताख्यान
...." ( १-४-९० ) इति कर्मप्रवचनीयत्वाद्द्वितीया । सुखरात्रिं पृ-
च्छतीति सौखरात्रिकः " पृच्छतौ सुस्नातादिभ्य " इति ठक् । कुशला-
नुयोगीति यावत् ॥ ९ ॥ उदरेति । अन्तर्ज्वलदर्कबिम्बानि अत एवा-
रुणमणिप्रकाशानि पूर्वपर्वत गह्वराणि शोणितपुरप्राकारवत् बभुः । शो-
णितपुरस्य चाग्निवेष्टितत्वं पुराणेषु प्रसिद्धम् ॥ १० ॥ अदरघोषि-

अळिगानलयैर्विभातवेला नाळिनामोदिसमीरवीजनैश्च ।
मधुसूदनराधयोस्तदानीं सुखनिद्रारसमेधयाञ्चकार ॥ १२ ॥

इतरेषु सरोरुहेषु निद्रामपहाय स्फुटितेष्वपि प्र॰ ते ।
इतरेतरवक्त्रचन्द्रयोगान्नयनाब्जे न तयोरबोधिषाताम् ॥ १३ ॥

अधिकेळिगृहं निशाम्य कान्तं हरिमाभीरवधूरतान्ततान्तम् ।
उपसर्पतु सन्निधिं तदीयं भृशभीराऽपि कथन्तरामुषःश्रीः ॥ १० २॥

भिर्नि : कूजद्भिः पतद्भिः पक्षिभिः । पतद्भिरागच्छद्भिश्शंखं ध॰ पुरुषैश्च महितः" दरोऽस्त्री शंखभययो"रिति रत्नमाला । भिक्षूणाम॰ गमनसूचनाय तत्पुरोगामिनः शिष्याः शंखं धमन्ति इति कश्चिद्देशाचारः । सदण्डो वेणुदण्डपाणिः । प्रकृते तु " माठरः पिङ्गलो दण्डश्चण्डांशोः पारिपार्श्विकाः " भास्करमस्करी भानुरेव भिक्षुः । रञ्जितताम्बरान्तः पाटलितगगनभागः काषायवसनश्च सन्नित एष्यति । ननु का का त्वामिह सर्वाः स्त्रियो दूरादपसरन्तु इति काकैरकूजि कूजितमिति भावे लुङ् । काकेत्याकारकः करटध्वनिरेवमुत्प्रेक्ष्यते॥११॥१२॥१३॥ कान्तं सुन्दरं पतिं च निशाम्य दृष्ट्वा । आभीरवधूर्गोपी "गोधुगाभीरवल्लवा" इत्यमरः । कथन्तरामिति तरबन्तात् "किमेत्तिङव्यय....( ५-४-११ ) इत्यामुः । उषःश्रीः प्रभातलक्ष्मीरेव लक्ष्मीः उषः श्रीरिति पदद्वयं वा । खण्डितेव प्रभातलक्ष्मीर्माधवस्य विमुखीबभूवेत्यर्थः । रतान्तसुप्तः प्रभातागमनं नाबुध्यतेति तात्पर्यं ॥ १४ ॥ विललंबे विलंबितवती । तिमिरादिधर्मोपलंभात् सर्वतोऽपसृताया अपि रजनेः धर्मिण्या निकुञ्जमात्रे विलंब उत्प्रेक्ष्यते ॥ १५ ॥ कराळरश्मिः सूर्यः कश्चन

तिमिरं चिकुरश्रिया श्रयन्ती नयने; कुट्मलितैश्च पद्मकोशान् ।
रजनिः परिकीर्णहारतारा विललंबे किमु राधिकानिकुञ्जे ॥ १५ ॥

पुर उत्पततः कराळरश्मेः करसाहस्रविलासिमण्डलाग्रात् ।
चकितां नयनेषु वेपमानांमनयोः पञ्चशरो ररक्ष निद्राम् ॥ १६ ॥

अथ बोधयितुं चिरप्रसुप्तं मिथुनं तत्र सखीजनः प्रवृत्त; ।
कृपणस्य कृषीवलस्य दैन्यं कृषिबीजक्रयणोद्यतस्य भेजे ॥ १७ ॥

समनह्यदपासनाय यस्याः स हि नादित्यकरोत्करोऽप्यहो ताम् ।
कथमेष भनक्तु योगनिद्रां दनुजारेर्निजभोगतल्पभाजः ॥ १८ ॥

अयि! बोधय राधिकां सुशीले! ननु तत्रांशुमती नियोजिता हि ।
बत का भवतीह मन्नियोगेष्विति सख्यः कलहं मिथो वितेनुः॥१९

क्रूरपुरुष इति च द्योत्यते। पञ्चशरः कृपाणपाणिं सहस्रकरमजयदित्याश्चर्ये ।कामवैभवादुदिते सूर्येऽपि तौ नाबुध्येतामिति तात्पर्यं ॥ १६ ॥ कृपणो बद्धमुष्टिः । कृषीवलः कृषकः । यथा कृपणः कृषकः भाविसमृद्धिं ज्ञात्वाऽपि प्रथमप्रसक्तं बीजक्रयणार्थकमर्थव्ययं न सहते तथा प्रबोधनमेव हितमिति विदन्नपि प्रथमाप्रियभयात् सखीजनो राधामाधवौ बोधयितुं न पारयामासेति भावः ॥ १७ ॥ आदित्यकरोत्करः सूर्यकिरणप्रकरः । सुरपाणिसमूहश्च । स प्रसिद्धः । यां योगनिद्रां । एष सखीजनः । दनुजारेर्दैत्यारेर्विष्णोः भोगतल्पं सुरतशय्या । शेषशरीर-

प्रथमोपनताप्रियं सहन्ते हितलोभादिह दूरदर्शिलोकाः ।
विरला हितवाग्व्यलीकहीनेलपराः शिक्षयति स्म तत्र काचित् ॥ २० ॥

उपजीविषु कोऽपि भक्तमानी प्रभवे यच्छति कापथेषु साह्यम् ।
गुरवस्त्वविशेषमेव दोषं गणयन्तीति परा भृशं शुशोच ॥ २१ ॥

किमुदास्स इहाद्य पीठमर्दत्यथ पप्रच्छ परा हरेस्सखायम् ।
स च शंभलि! किं भजस्युपेक्षामिति पृच्छान्तरमुत्तरीचकार ॥ २२ ॥

इति तासु विमोहितास्वदूरादुदगाद्गोपकुमारवंशघोषः ।
नटितेव हठाद्विघट्यमानं झटिति द्वन्द्वमबोधि चास्तनिद्रम् ॥ २३ ॥

प्रियदोर्वलयादथाच्छिनत्तां कृशगात्रीं स शठो हठादनेहा ।
अतिमुक्तलतामशोकयष्टेश्चिरसंवेष्टननिर्वृतां करीव ॥ २४ ॥

रूपा शय्या च । योगनिद्रा संभोगान्तनिद्रा । प्रसिद्धा विष्णोर्योगनि-द्रा च ॥ १८ ॥ अंशुमती नाम सख्यन्तरं । मिथोऽन्योन्यम् ॥ १९ स्वेन प्रयुक्तमुपदेशं स्वयमेवानुष्ठातुमक्षमा पराः शिक्षयतीत्युपहासः ॥ २० ॥ भक्तमानी भक्तंमन्यः । साह्यं साहाय्यम् । गुरवः तस्य प्रभोरेव पितृप्र-भृतयः । अविशेषं सर्वेषूपजीविषु समानम् । नायिकागुरुभ्यो भीताया अत एवाभिसारममृष्यन्त्याः कस्याश्चिद्वचनमिदम् ॥ २१ ॥ किमुदा-स्स इति किमुदासीनो भवसि । आदादिकादुदास्तेः सिप् । शंभलि कुट्टिनि ॥ २२ ॥ वंशघोषो वेणुनादः । अस्तनिद्रं विगतनिद्रं । द्वन्द्वं राधामाधवौ ॥ २३ ॥ अनेहा कालः प्रभातवेला " ऋदुशन

नयने दयिताधराद्विदूरे स्थलमीनाविव मम्लतुर्मृगाक्ष्याः ।
अपि तस्य मुखं क्षणेन जातं हृतकिञ्जल्कसरोजशोचनीयम् ॥२५॥

व्यरमत्तदुरोजकोकयूनोर्दयितासङ्गसुखं हठात्तदानीम् ।
बत नो भुवि किं किमेव भाव्यं प्रतिकूलं चलितुं विधौ प्रवृत्ते॥२६

अथ दुस्थितिरङ्गकैस्तदीयैर्द्रुतमन्योन्यशरीरविप्रयोगे ।
सुरभेरिव काप्यबष्कयिण्याः प्रतिपेदे निजवत्सदूरितायाः ॥ २७ ॥

द्रुतमेव निरैष्यतोर्निकुञ्जादनयोश्चेतासे विप्रयोगभीरौ ।
उदितौ युगपत्त्वराविलंबौ दिवि तेजस्तमसी इव क्षणेऽस्मिन्॥२८॥

...., ॥ ( ७-१-९४ ) इत्यनङ् । दोर्वलयात् बाहुमण्डलात् आच्छिनत् आचकर्ष । रौधादिकस्य छिदेर्लङ् । अतिमुक्तलता वासन्ती "अतिमुक्त; पुण्ड्रकश्च वासन्ती" इत्यमरः ॥ २४ ॥ २५ ॥ कोकयूनोः प्रभाते विरहोऽभदिति विस्मयः दैवे वामे सर्वं संभाव्यमेवेति । श्लेषेण समाधानम् । प्रकृते तु विधौ चन्द्रे कूलं पश्चिमाब्धितीरं प्रति चलितुं प्रवृत्ते अस्तोन्मुख इत्यर्थः ॥ २६ ॥ कापि दुस्थितिरनिर्वचनीया कष्टदशा । अबष्कयिण्या नवप्रसूतायाः "चिरसूता बष्कयणी"त्यमरः । प्रतिपेदे कर्मणि लिट् । दूरिताया इति तत् करोतीति णिचि-बाहुलकान्न दवादेशः ॥ २७ ॥ तेजस्तमसी इवेति "ईदूदेद्द्विवचन...." इति प्रगृह्यत्वादसन्धिः ॥ २८ ॥ अनुयुक्तेति सौखशायनि-

कथमप्यथ कामिनोस्तदानीं शनकैर्निर्गमनाभिमुख्यभाजोः ।
प्रणयादनुयुक्तसुप्रभातस्वरयन्नाळिजनोऽप्युपाससाद ॥ २९ ॥

गच्छामि गेहमयि भामिनि! साधयामी-
त्युक्ते वियोगविधुरालसपक्ष्ममालम् ।
सेर्ष्यानुरागकरुणं मुहुरर्थयन्तीम्
चेलाञ्चलोन्मुखकरां तरुणीं त्यजेत्कः ॥ ॥ ३० ॥

व्योम्नि स्वधामपरिपालनसम्मुखीनहुंकारिकौशिकनिरुद्धपथे निशान्ते।
पश्चात् पुरोऽप्यकुशलं चलितुं विलोक्य द्वन्द्वं त्रिशंकुमिव तावदवोचदाळिः

अजस्रं यस्स्वान्ते प्रतिवसति नद्धो गुणगणै-
रहो मुग्धे! तस्मादपि विरहमुद्भावयसि किम्?
इह प्रेमा यूनोर्गिरिनगरकान्तारभरितान्
प्रदेशान् प्रादेशानपि न गणयत्युद्धणरयः ॥ ३२ ॥

क इत्यर्थः ॥ २९ ॥ साधयामि गच्छामि। चेलेति वसनाग्रं जिघृक्षुः ॥ ३० ॥ प्रकृते निशान्ते प्रभाते व्योम्नि स्वनीडरक्षणाय गच्छद्भिः शब्दायमानैरुलूकैरावृते सति । त्रिशंकुपक्षे स्वधामपरिपालनसम्मुखीनाभ्यां एकस्य धाम गृहम्। अन्यस्य तेजः। हुंकारिभ्यां इन्द्रविश्वामित्राभ्यां निरुद्धपथे व्योम्न्येव निशान्ते गृहे स्थाने पश्चात् पुरोऽपि चलितुमकुशलम् । "महेन्द्रगुग्गुलूलूकव्याळग्राहिषु कौशिकः" इत्यमरः ।

मनस्विन्यः काले विधिबलपराधीनचरितं
विदित्वेदं विश्वं विषममपि मृष्यन्ति विरहं।
प्रतिष्ठाऽसौ पश्य प्रकटबहुरागाऽपि रजनिः
प्रतिष्ठासौ कान्ते शशिनि चलतीयं धृतिमती ॥ ३३ ॥

मितमपि हितमेतदिङ्गितज्ञा वचनमुदारमुदीर्य सा व्यरंसीत्।
तनुरपि गुळिका निहन्ति रोगं पटुभिषजो हि निदानवेदयस्य ३४॥

निहितमिव सुबीजं कालमाप्योर्वरायां फलमपुषदयत्नं तत्सुशीलोपदेशः ।
यदिह विधृतधैर्यं स्वप्रतिष्ठासमानं समजनि मिथुनं तद्राक् प्रतिष्ठासमानम्॥

कौशिको मुनिभेदे च" इति शेषश्च "धाम रश्मौ गृहे देहे स्थाने जन्म-प्रभावयोः" इति हैमः। आळिः सखी 'सुशीला' ॥ ३१ ॥ स्वान्ते मनसि स्वसविधे च। गुणानामेव गुणानां पाशानां गणैः । प्रादेशस्तर्जनीयुतांगुष्ठमितो देशः ॥ ३२ ॥ मनस्विन्योऽवामाः मृष्यन्ति सहन्ते। असौ प्रतिष्ठा। इयं तावल्लोकास्थितिः। प्रतिष्ठासौ प्रस्थातुमिच्छौ ॥३३॥ तनुः कृशा भिषजो गुळिका वैद्येन दत्ता गुळिका। निदानं वैद्यशास्त्रप्रसिद्धं रोगनिदानं वेत्तीति वेदयः 'अनुपसर्गाल्लिम्पविन्दधारिपारि....' (३-१-१३८) त्यादिना वेदेः शः ॥ ३४ ॥ आप्येति आङ्पूर्वस्याप्नोतेर्ल्यप्। उर्वरा सर्वसस्याढ्या भूमिः। सुशीलायाः सख्या उपदेशः। अयत्नं अनायासं यथा भवति तथा अपुषत् पुष्यतेर्लुङ्यङ् । स्वप्रतिष्ठासमानं स्वस्वास्थितेरनुरूपं यथा भवति तथा। प्रतिष्ठासमानं प्रस्थातुमिच्छदजानि जज्ञे। राधामाधवौ यथा यथं स्वं स्वं गृहं प्रति निवर्तितुकामा-

आश्लिष्याश्लिष्य गात्रं पुलकितमसकृद्गाढयन् बाहुबन्धा-
नाचुम्ब्याचुम्ब्य वक्त्रं मुहुरधरसुधापूरपाथेयहारी ।
आपृच्छ्यापृच्छ्य भूयः प्रणयमसृणितैर्गद्गदैरश्रु वर्षन्
मन्दं मन्दं मृगाक्षीं हरिरकृत सखीहस्तनिक्षेपमेव ॥ ३६ ॥

दैवादद्य मनोरथात् प्रियसखी लेभे चिरप्रार्थिता-
मित्यन्योऽन्यमुदीरयन्नथ निनायाऽऽळिजनो राधिकाम् ।
श्रीदाम्ना सह माधवोऽपि रजनीवृत्तान्तरोमन्थन-
प्रोन्मीलत्प्रमदोर्मिचुम्बनरसादानन्दसान्द्रो ययौ ॥ ३७ ॥

॥ इति विटविभावर्यां तुरीयो यामः ॥

बभूतामित्यर्थः । यद्यस्मान्मिथुनं प्रतिष्ठासमानमजानि तत्तस्मादुपदेशः फल-मपुपदिति योजना "समवप्रविभ्यः स्थः" (१-३-२२) इति तिष्ठतेः शानच् ॥ ३५ ॥ पथि साधु पाथेयं । आपृच्छ्यामन्त्र्य । निक्षेपो न्यासः ॥ ३६ ॥ इत्युदीरयान्निति । नायिकाया विरहवैधुर्यापनोदनार्थकं सखीनामिदं चाटुकौशलं । रोमन्थनं पुनः पुनः पर्यालोचनं । तत् करोतिणिजन्ताद्रोमन्थयतेर्ल्युट् । "आनन्दसान्द्रो ययौ" इति ग्रन्थान्ते मङ्गळं प्रयुक्तमिति सर्वमवदातन् ॥ ३७ ॥ शुभमस्तु ॥

इति श्रीविटविभावरीव्याख्यायां
चान्द्रिकाख्यायां तुरीयो यामः ॥

## अथ ग्रन्थप्रतिष्ठाशंसा

सम्पूर्णा सारसौघैर्दिशि दिशि घटितैरुज्वलत्काव्यलक्ष्मी-
सम्पन्नक्षत्रनाथोदयमहिततरा गोविलासांस्तदीयान् ॥
अश्रान्तं तत्र तत्र प्रथयतु सरसायामधामाभिरामा
दृश्या सद्भिर्विभावर्यधिकरुचिरियं शारदोल्लासयोगात् ॥ ३८ ॥

अथ कविस्समापितस्य स्वग्रन्थस्याशिषं प्रयुंक्ते द्वाभ्यां। सामिति । ग्रन्थपक्षे दिशि दिशि घटितै रसैस्सम्पूर्णा । उज्वलन्त्या काव्यलक्ष्म्या कवित्वश्रिया सम्पन्नात् क्षत्रनाथादुत्तमक्षत्रियाद्राजराजवर्मणः सकाशाच्च उदय उत्पत्तिस्तेन महिततरा । सरसायामैरनतिविस्तीर्णतया हृदयंगमैर्यामैः परिच्छेदैराभिरामा सद्भिर्दृश्या विबुधैर्विभाव्या शारदोल्लासयोगात् वाग्देवीविलासशालित्वात् अधिकरुचिः अध्येतृचेतोहरा । सेयं विभावरी विटविभावरीसंज्ञकमिदं काव्यं । तदीयान् क्षत्रनाथस्य कवेस्सम्बन्धिनो गोविलासान् वाग्विलासांस्तत्र तत्र प्रथयतु । रात्रिपक्षे घटितैस्संकुचितैस्सारसौघैः पद्मकदम्बकैः । काव्यः शुक्रः । नक्षत्रनाथश्चन्द्रः । सद्भिर्दृश्या ज्योतिर्भिः रम्या । रुचिश्शोभा । शारदोल्लासः शरत्कालसम्बन्धिविलासः । इयं विभावरी संकेतसङ्गतराधामाधवप्रणयसर्वस्वसाक्षिणी रात्रिः ॥ ३८ ॥ सर्वज्ञचूडामणिभिः विद्वच्छ्रेष्ठैः । सर्वज्ञचूडामणिना चन्द्रेण च

सर्वज्ञचूडामणिलाल्यमाना सूर्यादरालोकसुखप्रतीक्षा ।

विलासिमोदाय विभावरीयं जीयाच्चिरं दूरविभातशोभा ॥ ३९ ॥

सूर्यादरालोको विद्वत्कर्तृकसादरविलोकनम् । ज्योतिरन्तरपरिभाविनो रविकिरणाश्च । दूरेति एकत्र अतिप्रकटशोभा । अन्यत्र अनासन्नप्रभाता पद्यद्वयेन च ग्रन्थसमाप्तिमङ्गलं ग्रन्थप्रतिष्ठाशंसनञ्च श्लेषभङ्ग्या कृतमिति भद्रम् ॥ ३९ ॥

इति श्रीमदुदयवर्मसूरिसार्वभौमरचिता चन्द्रिकाख्या

विटविभावरीव्याख्या

सम्पूर्णा

उदयमुदयवर्मकोलभूभृत्कुलजलराशिसुधाकराद्दधाना

स्फुरतु विटविभावरीविभागे तिमिरनिराकरणाय चन्द्रिकेयम् ॥

कवेरेवेयं स्तुतिः

॥ शुभम् ॥